शिवधर्मग्रन्थमाला

अष्टादशं पुष्पम् (१८)

परिवर्धितं संस्कारणम् ई.स.२००३

# श्रीशिवपूजाविधिः

(श्रीरुद्रसहितः)



## ।। श्री जगद्गुरु विश्वाराध्यः प्रसीदतु ।।

निगमागमोक्त वीरशैवमाताच्या धर्मसिद्धांताप्रमाणे कथन केलेली **शिवपूजा** ही अत्यंत प्राचीन व सूर्यप्रकाशासारखी प्रसीद्ध आहे. देव-दानव-मानव अशा तिघांनीही (शिवपूजा) करुन आत्मोन्नति साधली. त्याशिवपूजा विधीत रुद्रादि मंत्र संहिता व आरत्या नामावल्या इत्यादि पठण करुन इष्टलिंगार्चन (शिवपूजन) करण्याचे विधान सर्वश्रुत आहे तोच विधी समस्त वीरशैव बांधवांनाही इष्ठलिंग पूजा करताना उपयोग व्हावा म्हणून **श्री श्री श्री १००८ जगद्गुरु डॉ. चंद्रशेखर शिवाचार्य महास्वामीजी** श्री क्षेत्र काशी यांचा २०१५ या वर्षातील श्रावण मास तपोऽनुष्ठान कर्नाटक येथील हानगल, जिल्हा- हावेरी येथे आयोजित केले आहे. या पर्वकालात **काशी महास्वामीजींचा ६९ वा जन्मोदिनोत्सव दिनांक २७ ऑगस्ट २०१५** या दिवशी असून त्यानिमित्त **श्री शिवपूजा विधी** हे पुस्तक (ग्रंथ) लोकार्पण करण्यात येत आहे. समस्त वीरशैव बांधव व भक्त-भाविकांनी याचा लाभ घ्यावा. आपण सर्वांनी या ग्रंथाची खरेदी करुन नित्यशिवपूजेत पठण करावे, व आपले जीवन पवित्र व समृद्ध करुन घ्यावे.

**पाचवी आवृत्ती,**
हानगल, जिल्हा- हावेरी, कर्नाटक
२७ ऑगस्ट २०१५

व्यवस्थापक,
**श्री विश्वाराध्य सिंहासन जंगमवाडी मठ, वाराणसी**

॥ श्री जगद्गुरु पंचाचार्या : प्रसीदन्तु ॥

# शिवपूजाविधि:

वीरशैवांनी प्रति दिवशी निजते वेळी '**श्रीजगद्गुरुपंचाचार्या मां रक्षत**' असे म्हणून गुरुध्यान करुन निजावे. पुन्हा प्रात:काळी उठताच इष्टलिंगास नमस्कार करुन, निश्चल मनाने गुरुध्यान करावे. तदनंतर शौचादी क्रिया आटोपून, दंतधावन करुन, खालील मंत्र म्हणत निर्मळ पाण्याने स्नान करावे.

**पुनंतु मा देवजना: पुनंतु मनसाधिय: ।**
**पुनंतु विश्वाभूतानि जातवेद: पुनीहि मा ॥**

असा मंत्र म्हणून स्नान करावे. त्यानंतर सोवळे अगर सोवळ्यातील धूत वस्त्र नेसून शिवपूजा करावयाचे घरापर्यंत पाणी शिंपडीत जावे. त्यानंतर –

**॥ॐ सर्वज्ञाय नम: ॥**

असा मंत्रोच्चार करीत शिवपूजा गृहात प्रवेश करावा. नंतर आसनाची पूजा करुन,

पृथ्वी त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्।।

असा मंत्र म्हणून आसनावर, पूर्वेकडे अगर उत्तरेकडे तोंड करुन बसावे. तदनंतर आचमन करुन एका फुलपात्रात गाळलेले पाणी भरुन घेऊन त्यावर "ॐ" असा प्रणव लिहून,

गंगे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिंधु कावेरि जलेऽस्मिन् सन्निधिं कुरु।।

ह्या मंत्राने अभिमंत्रून त्या मंत्रोदकाने शिवपूजेची सर्व सामग्री प्रोक्षण करावी (म्हणजे पूजेच्या सर्व सामानावर शिंपडावे) नंतर –

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।।

हा मंत्र म्हणत दाही दिशांस पाणी शिंपडावे. तदनंतर शिखेस (शेंडीस) गाठ देऊन मग ताठ बसून ॐ शिवाय नमः, ॐ शंकराय नमः, ॐ महेश्वराय नमः असे म्हणत तीन वेळा आचमन करुन प्राणायाम करावा.

## ।। संकल्प ।।

हर: ॐ शिव शिव शंभोराज्ञया प्रवर्तमानस्याद्यब्रह्मणो द्वितीय परार्धे श्वेतवराहकल्पे वैवस्वतमन्वंतरे कलियुगे प्रथमपादे जंबूद्वीपे भरतवर्षे भरतखंडे मेरोर्दक्षिणदिग्भागे महाराष्ट्रदेशे व्यावहारिकचांद्रमाने शालीवाहनशके प्रभवादिषष्टिसंवत्सराणां मध्ये ( ) संवत्सरे ( ) अयने ( ) मासे ( ) पक्षे ( ) वासरे ( ) नक्षत्रे ( ) योगे ( ) करणयुक्तायां ( ) शुभतिथौ ( ) गोत्रोत्पन्नोऽहं ममोपात्तदुरितक्षयद्वारा श्रीपार्वतीपरमेश्वर प्रीत्यर्थं इष्टलिङ्ग पूजां करिष्ये ।

असा गोत्र सूत्र उच्चारासहित संकल्प करुन दोन्ही हात जोडून अंतरंगामध्ये प्रथम गुरुध्यान करुन मग शिवध्यान करावे.

## ।। गुरुध्यानम् ।।

पंचाननतनूद्भूतान् पंचाक्षरमनूपमान् ।
पंचसूत्रकृतो वंदे पंचाचार्यान् जगद्गुरुन् ।।

## ।। शिवध्यानम् ।।

हृत्पद्मं शिवधर्मकंदसहितं सुज्ञाननालं तथा।
नित्यैश्वर्यदळाष्टकं शशिनिभं वैराग्यसत्कर्णिकम् ।।
श्रीरुद्रेश्वरकेसरान्वितमिदं संचिन्त्य तन्मध्यमे।
सूर्येंदूज्वलवह्निमंडलगतं ध्याये शिवं चिन्मयम् ।।

याप्रमाणे ध्यान केल्यावर प्रणवाचा उच्चार करीत कुरंगमुद्रेने (अंगुष्ठ, अनामिका, मध्यमा ह्या तीन बोटांनी,) भस्म घेऊन, डाव्या हाताच्या तळव्यावर ठेवून, बिल्वादिके अर्पण करुन पूजा करावी आणि दोन्ही हातांस भस्म लावून अंगुष्ठादी पंचांगुलीवर ''य'' करादी ''न'' कारांत पंचाक्षरीमंत्र उच्चारीत भस्मन्यास करावा.

ॐ अस्य श्रीविभूतिधारण महामंत्रस्य पिप्पलाद ऋषिः। देवी गायत्री छंदः ।।
कालाग्निरुद्रो देवता ।। अग्निरिति बीजं ।। भस्मेति शक्तिः ।। शिव इति कीलकं ।।
मम शिवज्ञानसंपत्सिद्ध्यर्थं भस्मधारणे विनियोगः ।।

।। करन्यायस: ।।

ॐ कालाय नम:–अंगुष्ठाभ्यां नम: ।। कलविकरणाय नम:–तर्जनीभ्यां नम: ।। बलविकरणाय नमो बलाय नम:–मध्यमाभ्यां नम: ।। बलप्रमथनाय नम: –अनामिकाभ्यां नम: ।। सर्वभूतदमनाय नम:–कनिष्ठिकाभ्यां नम: ।। मनोन्मनाय नम:–करतलकरपृष्ठाभ्यां नम: ।।

।। अंगन्यास: ।।

ॐ कालाय नम:–हृदयाय नम: ।। कलविकरणाय नम:–शिरसे स्वाहा ।। बलविकरणाय नमो बलाय नम:–शिखायै वषट् ।। बलप्रमथनाय नम: –कवचाय हुँ ।। सर्वभूतदमनाय नम: नेत्रत्रयाय वौषट् ।। मनोन्मनाय नम:–अस्त्राय फट् ।।

असे म्हणून न्यास केल्यावर भस्मास नमस्कार करुन त्यावर उजवा हात झाकून, उजव्या मांडीवर ठेवून, मौन होऊन, पंचाक्षर मंत्राने ८ वेळेस अभिमंत्रावे आणि मग –

ईशान:सर्वविद्यानामीश्वर: सर्वभूतानाम् ।
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।

ह्या मंत्राने ५ वेळा मस्तकावर,

तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्र : प्रचोदयात्।।

या मंत्राने ४ वेळेस मुखावर,

अघोरेभ्योऽथघोरेभ्योघोरघोरतरेभ्य:।
सर्वेभ्य: सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररुपेभ्य:।।

ह्या मंत्राने ८ वेळेस हृदयावर,

ॐ वामदेवाय नमो ज्येष्ठाय नम: श्रेष्ठाय नमो रुद्राय नम: कालाय नम: कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नम: सर्वभूतदमनाय नमो मनोन्मनाय नम:।।

ह्या मंत्राने १३ वेळा गुह्य (नाभीच्या खालील) प्रदेशावर,

सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनम:।
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नम:।।

ह्या मंत्राने ८ वेळेस दोन्ही पायांवर आणि "ॐ" ह्या प्रणवाने बाकी सर्व स्थानांवर भस्माने सिंचन करावे. ह्याप्रमाणे भस्मसिंचन केल्यावर आपल्यास पाहिजे तेवढे भस्म डाव्या हातावर घेऊन त्यावर उजवा हात झाकून –

**अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म, भस्मेति भस्म, सर्वं हवा इदं भस्म मन इत्येतानि चक्षुंषि भस्मानि ।।**

ह्या मंत्राने भस्मास झाकून पंचाक्षर मंत्राने ७ वेळ अभिमंत्रून त्यात पाणी मिश्रित करावे. अशा प्रकारच्या जलमिश्रित भस्माने ह्या खाली सांगितलेल्या १५ स्थानांस, त्या त्या स्थानापुढे लिहिलेले मंत्र म्हणूत त्रिपुण्ड्र भस्म लावावे. (तर्जनी, अनामिका, मध्यमा ह्या तीन बोटांनी भस्म लावावे.) स्त्रियांनी व पुरुषांनीही क्रमयुक्त त्रिपुंड्र धारण करावे.

**मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः ।**
**वीरान्मानो रुद्र भामितोवधीर्हविष्मन्तो नमसा विधेम ते ।।**

या मंत्राने भस्मात जलमिश्रण करुन अनामिका बोटाने करावे.

त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं। अगस्त्यस्य – त्रियायुषं यद्देवानां त्रियायुषं तन्मे अस्तु त्रियायुषं।।

हा मंत्र प्रथम म्हणून त्रिपुंड्र धारण करावे.

| | त्रिपुंड्र धारणाची स्थाने | मंत्र |
| --- | --- | --- |
| १. | मस्तकावर | ॐ शिवाय नमः |
| २. | कपाळावर | ॐ महेश्वराय नमः |
| ३–४. | दोन्ही कानांवर | ॐ रुद्राय नमः |
| ५. | कंठाचे ठायी | ॐ श्रीकंठाय नमः |
| ६–७. | दोन्ही भुजांवर | ॐ शंभवे नमः |
| ८. | हृदयावर | ॐ ईश्वराय नमः |
| ९. | नाभीवर | ॐ महादेवाय नमः |
| १०. | पाठीवर | ॐ पशुपतये नमः |
| ११–१२. | दोन्ही कोपरांवर | ॐ शंकराय नमः |

१३. खांद्यावर ॐ वृषभध्वजाय नमः

१४-१५. दोन्ही मनगटांवर ॐ परमात्मने नमः

या प्रमाणे १५ स्थानांवर त्रिपुंड्र धारण केल्यानंतर रुद्राक्षांची पत्रपुष्पदिकांनी पूजा करुन,

## ।। रूद्राक्षधारणमंत्रः ।।

रुद्राक्षवृक्षबीजाय भूतिसंभूतिहेतवे ।
नेत्रत्रयाय रुद्राय नमो लोकहितार्थिने ।।

ह्या मंत्राने रुद्राक्षांस नमस्कार करुन शिखादी स्थानांचे ठायी संख्यापरत्वे मुखपरत्वे मंत्रपूर्वक धारण करावे. असे रुद्राक्ष धारण केल्यावर गुरूंनी उपदेश केलेल्या मंत्राचा न्यास (करन्यास, देहन्यास, अंगन्यास) करावा. ब्रह्मचाऱ्यांनी सृष्टिन्यास, गृहस्थांनी स्थितिन्यास, वानप्रस्थ व संन्याशांनी लयन्यास गुरुमुखाने समजून घेऊन, न चुकता करावे. त्यानंतर लिंगाकारातून इष्टलिंग बाहेर काढून, ते डाव्या हातावर डावीकडे गोमुख करुन ठेवून अभिषेकादी उपचार क्रमाने मंत्रपूर्वक पूजा करावी -

## ।। पाद्यम् ।।

यद्भक्तिलेशसंपर्कात्परमानंदसंभवः।
तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ।।

ॐ सुवः श्री सांबाय नमः पाद्यं समर्पयामि।

## ।। अर्घ्यमन्त्रः ।।

तापत्रयहरं दिव्यं परमानंदलक्षणम्।
तापत्रयविनिर्मुक्त्यै तवार्घ्यं कल्पयाम्यहम् ।।

ॐ महः श्री सांबाय नमः अर्घ्यं समर्पयामि।

## ।। आचमनम् ।।

वेदानामपि वेदाय देवानां देवतात्मने।
आचमं कल्पयामीश शुद्धानां शुद्धिहेतवे ।।

ॐ जनः श्री सांबाय नमः आचमनं समर्पयामि।

## ।। मधुपर्कम् ।।

सर्वकालुष्यहीनाय परिपूर्णसुखात्मने ।
मधुपर्कं महादेव कल्पयामि प्रसीद मे ।।

ॐ तप: श्री सांबाय नम: मधुपर्कं समर्पयामि ।

## ।। स्नानम् ।।

परमानंदबोधाब्धौ निमग्ननिजमूर्तये ।
सांगोपांगमिदं स्नानं कल्पयामि प्रसीद मे ।।

ॐ सत्यं श्री सांबाय नम: स्नानं समर्पयामि ।

## ।। क्षीरम् (दूध) ।।

आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य संगथे ।।

श्रीसांबाय नम: क्षीरेण स्नापयामि. ईशानमन्त्रेण शुद्धोदकेन स्नापयामि ।

## ।। दधि (दही) ।।

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्राण आयूंषि तारिषत् ।।

श्रीसांबाय नमः दध्ना स्नापयामि; तत्पुरुषमन्त्रेण शुद्धोदकेन स्नापयामि ।

## ।। घृतम् (तूप) ।।

शुक्रमसि ज्योतिरसि तेजोऽसि देवो वस्सवितोत्पुना –
त्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः ।।

श्रीसांबाय नमः घृतेन स्नापयामि; अघोरमन्त्रेण शुद्धोदकेन स्नापयामि ।

## ।। मधु (मध) ।।

मधुवाता ऋतायते मधुक्षरंति सिंधवः । माध्वीनर्स्संत्वोषधीः ।
मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ।
मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः । माध्वीर्गावो भवंतु नः ।।

श्रीसांबाय नमः मधुना स्नापयामि; वामदेवमन्त्रेण शुद्धोदकेन स्नापयामि ।

## ।। शर्करामंत्रः ।।

स्वादुः पवस्व दिव्याय जन्मने स्वादुरिंद्राय सुह वीतु नाम्ने।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधु मां अदाभ्य : ।।

श्रीसांबाय नमः शर्करया स्नापयामि; सद्योजातमन्त्रेण शुद्धोदकेन स्नापयामि ।

॥ श्री ॥

# ॥ श्रीरुद्राध्यायप्रारम्भः ॥

## ॥ अथ श्रीरुद्राध्यायेन महाभिषेकः ॥

हरः ॐ। अस्य श्री रुद्रस्य प्रश्नस्य अनुष्टुप्छन्दः, अघोर ऋषिः, संकर्षणमूर्ति स्वरुपो योऽसावादित्यः परमपुरुषःस एष रुद्रो देवता, अग्निक्रतुचरमायामिष्टिकायां शत-रुद्रीयजपाभिषेकयोर्विनियोगः। सलकस्य रुद्राध्यायस्य श्रीरुद्रो देवता, एका गायत्री च्छन्दः, तिस्त्रोऽनुष्टुभस्तिस्त्रः पंक्तयः, सप्तानुष्टुभो द्वे जगत्यौ, श्री परमेष्ठी ऋषिः, श्री परमेश्वरप्रीत्यर्थे शतरुद्रीयजपेऽभिषेके च विनियोगः।

## करन्यास :

अग्निहोत्रात्मने अङ्गुष्ठाभ्यां नमः। दर्शपूर्णमासात्मने तर्जनीभ्यां नमः चातुर्मासात्मने मध्यमाभ्यां नमः निरुढपशुबन्धात्मने अनामिकाभ्यां नमः। ज्योतिष्टोमात्मने कनिष्ठिकाभ्यां नमः। सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यां नमः ॥

## देहन्यासः

अग्निहोत्रात्मने हृदयाय नमः। दर्शपूर्णमासात्मने शिरसे स्वाहा। चातुर्मास्यात्मने शिखायै वषट्। निरुढपशुबन्धात्मने कवचाय हुं। ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट्। सर्वक्रत्वात्मने अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः ।।

## ध्यानम्

आपातालनभःस्थलान्तभुवनब्रह्माण्डमाविस्फुरज्ज्योतिस्फाटिकलिङ्गमौलिविलसत्पूर्णेन्दुवान्तामृतैः अस्तोकाप्लुतमेकवारमनिशं रुद्रानुवाकान् जपन् ध्यायेदीप्सितसिद्धये ध्रुवपदं विप्रोऽभिषिञ्चेच्छिवम् ।।१ ।। ब्रह्माण्डव्याप्तदेहा भसितहिमरुचा भासमाना भुजङ्गैः कण्ठे कालाः कपर्दाकलितशशिकलाश्चण्डकोदण्डहस्ताः। त्र्यक्षा रुद्राक्षभूषास्सुललितविभवाश्शांभवा मूर्तिभेदा रुद्राः श्रीरुद्रसूक्तप्रकटितविभवा नः प्रयच्छन्तु सौख्यम् ।।२ ।।

शुद्धस्फटिकसंकाशं शुद्धविद्याप्रदायकम्।
शुद्धं पूर्णचिदानन्दं सदाशिवमहं भजे ।।३ ।।

## ।। अथ श्रीरुद्रप्रारम्भः ।।

ॐ नमो भगवते रुद्राय। नमस्ते रुद्र मन्यव उतो त इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः।। या त इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय।। या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि।। यामिषुं गिरिशन्त हस्ते।। बिभर्षस्तवे। शिवां गिरित्र तां कुरु मा हिंꣳसीः पुरुषं जगत्।। शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नस्सर्वमिज्जगदयक्ष्मꣳ सुमना असत्।। अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः।। असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चेमाꣳ रुद्रा अभितो दिक्षु श्रितास्सहस्रशो वैषाꣳ हेड ईमहे।। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः।। उतैनं विश्वा भूतानि स दृष्टो मृडयातिनः।। नमो अस्तु नीलग्रीवाय सहस्राक्षायमीढुषे। अथो ये अस्य सत्त्वानोऽहं

तेभ्योऽकरं नमः।। प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् याश्च ते हस्त इषवः।। परा ता भगवो वप।। अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव।। विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳउत। अनेशन्नस्येषव आभुरस्य निषङ्गधिः।। या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज।। नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने।। परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम्।। नमस्ते अस्तु भगवन् विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरुषाय त्रिपुरान्तकाय त्रिकालाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः।।

।। इति प्रथमोऽनुवाकः।।

ॐ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये

नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततताविने क्षेत्राणां पतये नमो नमः सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्त्वानां पतये नमः ।।

।। इति द्वितीयोऽनुवाकः ।।

ॐ नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो जिघा७ँ सद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम

इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्चवो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्य : सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ।।

।। इति तृतीयोऽनुवाक :।।

ॐ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृ७ हतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरुपेभ्यो विश्वरुपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्य : सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः

कर्मारिभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नमः इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्य : श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ।।

।। इति चतुर्थोऽनुवाक : ।।

ॐ नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ।।

।। इति पञ्चमोऽनुवाकः ।।

ॐ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय

चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाऽऽशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥

॥ इति षष्ठोऽनुवाक :॥

ॐ नमो दुन्दुभ्याय चाऽऽहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चाऽऽयुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥

॥ इति सप्तमोऽनुवाकः ॥

ॐ नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय च चाऽऽलाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥

॥ इति अष्टमोऽनुवाकः ॥

ॐ नम इरिण्याय च प्रपथ्याय च नमः किंꣳ शिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो हृदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय

च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो देवानाꣳ हृदयेभ्यो नम आनिर्हतेभ्यो देवानाꣳ हृदयेभ्यो नम आमीवत्केभ्यो देवानाꣳ हृदयेभ्यः ।।

।। इति नवमोऽनुवाक : ।।

ॐ द्रापे अन्धसस्पते दरिद्रं नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किञ्चनाऽऽममत् ।। या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ।। इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।। मृडा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ।। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ।। मा

नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते।। आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः।। स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्। मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः।। परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय।। मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि।। विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्र७ँ हेतयोऽन्यमस्मन्निवपन्तु ताः।। सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि।।

।। इति दशमोऽनुवाकः।।

ॐ सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्। तेषा७ँ सहस्रयोजनेऽव धन्वानि

तन्मसि ।। अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि (तेषाꣳ ) ।। नीलग्रीवा: शितिकण्ठा: शर्वा अध: क्षमाचरा: (तेषाꣳ०) ।। नीलग्रीवा: शितिकण्ठा दिवꣳ रुद्रा उपश्रिता: (तेषाꣳ०) ।। ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिता: (तेषाꣳ०) ।। ये भूतानामधिपतयो विशिखास: कपर्दिन: (तेषाꣳ०) ।। ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् (तेषाꣳ०) ।। ये पथां पथिरक्षय ऐलबृदा यव्युध: (तेषाꣳ०) ।। ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिण: (तेषाꣳ०) ।। य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे तेषाꣳ० सहस्रयोजनेऽव धन्वानि तन्मसि ।। नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ।। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।। एते सहस्रमयुतं पाशा मृत्योर्मर्त्याय हन्तवे ।तान् यज्ञस्य

मायया सर्वानवयजामहे ।। मृत्यवे स्वाहा मृत्यवे स्वाहा ।। ॐ नमो भगवते रुद्राय मृत्युर्मे पाहि। यो रुद्रो अग्नौ यो अप्सु य औषधीषु यो रुद्रो विश्वा भुवनानि विवेश तस्मै रुद्राय नमो अस्तु ।।

।। इति एकादशोऽनुवाकः ।।

## अथ चमकाध्याय :

ॐ अग्नाविष्णू सजोषसे मा वर्धन्तु वां गिरः। द्युम्नैर्वाजेभिरा गतम् वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म अधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानिच मेऽस्थानी च मे परुꣳषि च मे शरीराणि च मे ।।

।। इति प्रथमोऽनुवाकः ।।

ॐ ज्यैष्ठ्यं च मे आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ।।

।। इति द्वितीयोऽनुवाकः ।।

ॐ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वश्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च में सीरं च मे लयश्च म ऋतुं च मेऽमृतं च मे यक्ष्मं च मेऽनामयश्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ।।

।। इति तृतीयोऽनुवाकः ।।

ॐ उर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसूराश्च मे प्रियंगवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ।।

।। इति चतुर्थोऽनुवाकः ।।

ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च मे ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ।।

।। इति पञ्चमोऽनुवाकः ।।

ॐ अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ।।

।। इति षष्ठोऽनुवाकः ।।

ॐ अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रावायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेद्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ।।

।। इति सप्तमोऽनुवाकः ।।

ॐ इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मे धिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म अग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ।।

।। इति अष्टमोऽनुवाकः ।।

ॐ अग्निश्च मे घर्मश्च मेऽर्कश्च के सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्करीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पताम् ।।

।। इति नवमोऽनुवाकः ।।

ॐ गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे

षष्ठवाच्च मे षष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ।।

।। इति दशमोऽनुवाकः ।।

ॐ एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश ज मे नवदश च म एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च म एकत्रिंशश्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मे मेऽष्टौ च मे द्वादश च मे षोडश च मे विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मे द्वात्रिंशच्च मे षट्त्रिंशच्च मे चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे वाजश्च प्रसवश्च पिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्रियश्चान्त्यायनश्चान्त्यश्च भौवनश्चाधिपतिश्च ।।

।। इति एकादशोऽनुवाकः ।।

ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्था मदा निशंसिषद् विश्वेदेवा:सूक्तवाच: पृथिवीमातर्मा मा हि৩ सीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ।। ॐ शान्ति : शान्तिः शान्तिः ।।

## अथ पुरूषसूक्तम्

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ।। पुरुषा एवेद৩ सर्व यद्भूत यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ।। एतावानस्य महिमा अतो ज्यायाँश्च पुरुषः ।।१ ।। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाऽभवात्पुनः ।। ततो विष्वङ् व्यक्रामत साशनानशने अभि । तस्माद्विराडजायत विराजो अधिपुरुषः । स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ।।२ ।। यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः । सप्तास्यासन् परिधयः त्रिस्सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् । तं यज्ञं बर्हिषि

प्रौक्षन् पुरुषं जातमग्रतः ।।३ ।। तेन देवा अयजन्त साध्या ऋषयश्च ये । तस्माद्यज्ञात् सर्वहुतः
संभृतं पृषदाज्यम् । पशूंस्ताश्चक्रे वायव्यान् आरण्यान् ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः
ऋचस्सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्मात् यजुस्तस्मादजायत ।।४ ।। तस्मादश्वा
अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः । यत्पुरुषं
व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू कावूरु पादावुच्येते ।। ब्राह्मणोऽस्य
मुखमासीत् । बाहू राजन्यः कृतः ।।५ ।। ऊरु तदस्य यद्वैश्यं पद्भ्याऽऽ शूद्रो अजायत ।।
चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ।। नाभ्या
आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्याꣳ भूमिर्दिशः श्रोत्रात् तथा लोकाꣳ
अकल्पयन् ।।६ ।। वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे । सर्वाणि रुपाणि
विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदास्ते ।। धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान्
प्रदिशश्चतस्रः । तमेव विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ।। यज्ञेन यज्ञमयजन्त
देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।।७ ।।

अद्भ्यः संभूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे।। वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्। तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय।। प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते।।८।। तस्य धीराः परिजानन्ति योनिं मरीचीनां पदमिच्छन्ति वेधसः।। यो देवेभ्य आतपति यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये।। रुचं ब्राह्मं जनयन्तः। देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात् तस्य देवा असन् वशे।।९।। ह्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे नक्षत्राणि रुपम् अश्विनौ व्यात्तम्। इष्टं म निषाण अमुं म निषाण। सर्वं म निषाण।।१०।। ॐ तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्व जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे।।११।।

।। इति पुरुषसूक्तं समाप्तम्।।

***

।। भस्मधारणमंत्रः ।।

अनादि शाश्वतं शांतं चैतन्यं चित्स्वरुपकम् ।
चिदंगं वृषभाकारं चिद्भस्म लिंगधारणम् ।।

श्रीसांबसदाशिवाय नमः विभूतिं धारयामि ।

।। गंगधारणमंत्र ।।

परमानंदसौरभ्यं परिपूर्णदिगंतरम् ।
गृहाण परमं गंधं कृपया परमेश्वर ।।

श्रीसांबसदाशिवाय नमः गंधं धारयामि । (अनामिका बोटाने गंध लावावे)

।। अक्षतधारणमंत्रः ।।

अक्षतान् धवलान् दिव्यांस्तिलतंडुलमिश्रितान् ।
अर्पयामि महाभक्त्या प्रसीद परमेश्वर ।।

श्रीसांबसदाशिवाय नमः अक्षतान् धारयामि । (अक्षताही अनामिकेने वाहाव्यात)

॥ बिल्वपत्रधारणमंत्रः ॥

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रियायुधम्।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम्॥

श्री सांबसदाशिवाय नमः बिल्वपत्राणि धारयामि। (बिल्वपत्रे मध्यमा व अनामिका ह्या दोन बोटांनी अधोमुख करुन वहावी.)

॥ पुष्पधारणमंत्रः ॥

तुरीयवनसंभूतं नानागुणसमन्वितम्।
आनंदसौरभं पुष्पं गृह्यतामिदमुत्तमम्॥

श्री सांबसदाशिवाय नमः नानाविधपुष्पाणि समर्पयामि। (पुष्पे मध्यमा–अनामिका ह्या दोन बोटांनी ऊर्ध्वमुख करुन वहावी.)

### ।। धूपमंत्र: ।।

वनस्पतिरसोपेतो गंधाढ्यो धूप उत्तम: ।
आघ्रेय: सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।

श्री सांबसदाशिवाय नम: धूपमाघ्रापयामि ।

### ।। दीपमंत्र: ।।

स्वप्रकाश महादेव: सर्वांतस्तिमिरापह: ।
सबाह्याभ्यंतरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।।

श्री सांबसदाशिवाय नम: दीपं नीराजयामि ।

### ।। कर्पूरदीपमंत्र ।।

कर्पूरनिर्मितं दीपं स्वर्णपात्रे निवेशितम्
नीराजितं मया भक्त्या गृहाण परमेश्वर ।।

श्री सांबसदाशिवाय नम: कर्पूरदीपं नीराजयामि ।

## ।। नैवेद्यमंत्रः ।।

नैवेद्यं षड्रसोपेतं नानाभक्ष्यसमन्वितम् ।
दधिक्षीरघृतोपेतं नैवेद्यं प्रतिगृह्यताम् ।।

श्री सांबसदाशिवाय नमः नैवेद्यं निवेदयामि, नैवेद्यान्ते पानीयं समर्पयामि ।

## ।। ताम्बूलमंत्रः ।।

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम् ।।

श्री सांबसदाशिवाय नमः तांबूलं समर्पयामि, तांबूलान्ते पानीयं समर्पयामि ।

## ।। दक्षिणामंत्रः ।।

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदं प्रयच्छामि महेश्वर ।।

श्री सांबसदाशिवाय नमः सुवर्णदक्षिणां समर्पयामि, अर्घ्यं स्वाहा ।

॥ घंटानादमंत्रः ॥

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम्।
कुर्वे घंटारवं नित्यं सर्वोपद्रवनाशनम्॥

श्री सांबसदाशिवाय नमः घंटानादं श्रावयामि।

॥ पुष्पांजलिमंत्रः ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
तेहनाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

श्री सांबसदाशिवाय नमः पुष्पांजलिं समर्पयामि।

॥ प्रदक्षिणामंत्रः ॥

प्रकृष्टपापनाशाय प्रकृष्टफलसिद्धये।
प्रदक्षिणं करोमीश प्रसीद परमेश्वर॥

श्री सांबसदाशिवाय नमः प्रदक्षिणं करोमि।

## ।। नमस्कारमंत्रः ।।

**नमः शिवाय शान्ताय नमः सोमाय शंभवे ।**
**नमः शिवाय कल्याणीपतये ते नमो नमः ।।**

श्री सांबसदाशिवाय नमः नमस्कारं करोमि ।

## ।। स्तोत्रम् ।।

**हर शंभो महादेव विरुपाक्ष त्रिलोचन ।**
**दयासिन्धो दीनबन्धो रक्ष रक्ष महेश्वर ।।**
**मायासमुद्रपतितं अनन्तकलुषान्वितम् ।**
**मामुद्धर महेशान भक्तवत्सल शंकर ।।**

अशी स्तुती करीत इष्टलिंगाचे ठायी दृष्टी ठेवून निर्मळ मनाने गुरुने उपदेशिलेला मंत्र एक हजार वेळा अगर एकशेआठ वेळा जपावा. तदनंतर शिवपादोदकाचा स्वीकार करावा.

## ।। तीर्थस्वीकारमंत्रः ।।

**ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम्।**
**ऊर्ध्वरेतं विरुपाक्षं विश्वरुपाय वै नमो नमः ।।**

श्री सांबसदाशिवाय नमः तीर्थं स्वीकरोमि।

याप्रमाणे शिवलिंगतीर्थ स्वीकार केल्यावर पुन्हा शिवलिंगाची संक्षेपाने बिल्वादिकाने पूजा करावी व पूजनयुक्त असे ते इष्टलिंग तसेच लिंगाकारात ठेवावे. (इष्टलिंगाच्या मस्तकावर असलेले बिल्वादी काढू नये.)

**मंत्रलोप तंत्रलोप क्रियालोप विद्धापराध–प्रायश्चित्तार्थ मूलमंत्रजपं करिष्ये।।**

म्हणून गुरुपदिष्ट महापंचाक्षरीमंत्राचा ११ वेळा जप करावा।

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।**
**पाहि मामपराधेभ्यः पितापुत्रमिव प्रियम्।।**

असे म्हणून पुष्पासहित अक्षतोदक कनिष्ठिका बोटाने अभिषेक केलेल्या पात्रामध्ये सोडून पूजा समाप्त करावी त्यानंतर खाली लिहिलेले गुरुस्तोत्र व अष्टक वगैरेंचे स्तवन करावे.

## ।। अथ गुरुस्तुति: ।।

## ।। मुक्तिपंचकम् ।।

आचार्य:परिसेव्यतां शिवकरं लिंगं सदा धार्यताम् ।
नित्यं जंगम ईड्यतां परतरं पादोदकं पीयताम् ।।
शुद्धान्नं परिगृह्यतां भवहरं भस्मानुसंलिप्यताम् ।
पंचाचार्यपदांबुजेषु सततं चेत: समाधीयताम् ।।१ ।।

रुद्राक्ष: परिधार्यतां प्रियकरी पंचाक्षरी जप्यताम् ।
पंचाचारचयोऽर्ज्यतां पशुपति: पंचानन: पूज्यताम् ।।
पंचक्लेशगणोऽर्द्यतां भ्रमकर: पंचायुधो भ्रश्यताम् ।
पंचाचार्यपदांबुजेषु सततं चेत: समाधीयताम् ।।२ ।।

धर्मे दुर्मतिरुज्झ्यतां श्रुतिमतं कर्म स्वनुष्ठीयताम् ।
शर्मत्वं परिभाव्यतां दृढतरं प्राक्कर्म संहार्यताम् ।।

शांतिः संततमीप्स्यतां गुरुकुले भक्तिः समाश्रीयताम ।
पंचाचार्यपदांबुजेषु सततं चेतः समाधीयताम् ।।३।।
वेदार्थो हि विचार्यतां गुरुकृतं सूत्रं समालोच्यताम् ।
तद्भाष्यं सुसमीक्ष्यतां गुरुमुखाच्छैवागमः श्रूयताम् ।।
दुस्तर्कः परिभूयतां शिवमयं ज्ञानं च संपाद्यताम् ।
पंचाचार्यपदांबुजेषु सततं चेतः समाधीयताम् ।।४।।
मोहो ब्रह्मणि बध्यतां तदपरे बाढं समुत्सृज्यताम् ।
सर्वं शैवमितीर्यतां परशिवाद्वैते मतिर्युज्यताम् ।।
कैवल्यं परिमृग्यतां परशिवब्रह्मेत्यहं भाव्यताम् ।
पंचाचार्यपदांबुजेषु सततं चेतः समाधीयताम् ।।१।।
काशीनाथ कविप्रोक्तं पंचकं भक्तकंचुकम् ।
यः पठेत्परया भक्त्या स याति परमं पदम् ।।

## ।। द्वादशज्योतिर्लिंगस्तोत्रम् ।।

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोंकोरममलेश्वरे ।।१ ।।

परल्यां वैद्यनाथं च डाकिन्यां भीमशंकरम् ।
सेतुबन्धे तु रामेशं नागेशं दारुकावने ।।२ ।।

वाराणस्यां तु विश्वेशं त्र्यंबकं गौतमीतटे ।
हिमालये तु केदारं घृसृणेशं शिवालये ।।३ ।।

एतानि ज्योतिर्लिंगानि सायं प्रातः पठेन्नरः ।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति ।।४ ।।

इति ज्योतिर्लिंगस्तोत्रम्

## ।। पंचाक्षरी – स्तुतिः ।।

नागेंद्रहाराय पुरांतकाय स्मरांगरागाय महेश्वराय।
देवादिदेवाय दिगंबराय तस्मै नकाराय नमः शिवाय ।।१।।
मत्तेभचर्माम्बरभूषिताय समस्तगीर्वाणगणार्चिताय।
त्रैलोक्यनाथाय सुरेश्वराय तस्मै मकाराय नमः शिवाय ।।२।।
शिवाय गौरीवदनारविंदसूर्याय दक्षाध्वरनाशनाय।
चंद्रार्कवैश्वानरलोचनाय तस्मै शिकाराय नमः शिवाय ।।३।।
वशिष्ठकुम्भोद्भवगौतमादि–मुनींद्रवन्द्याय मुनीश्वराय।
श्रीनीलकंठाय वृषध्वजाय तस्मै वकाराय नमः शिवाय ।।४।।
यज्ञेशरुपाय जटाधराय पिनाकहस्ताय जनाश्रिताय।
नित्याय शुद्धाय निरंजनाय तस्मै यकाराय नमः शिवाय ।।५।।
पंचाक्षरमिदं पुण्य यः पठेच्छिवसंन्निधौ । शिवलोकवाप्रोति शिवेन सह मोदते ।।

# ।। लिंगाष्टकम्।।

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभसितसुशोभितलिङ्गम् ।
जन्मजदुःखविनाशकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।१।।

देवमुनिप्रवरार्चितलिङ्गं कामदहनकरुणाकरलिङ्गम् ।
रावणदर्पविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।२।।

शुद्धसुगन्धसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम् ।
सिद्धसुरासुरवंदितलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।३।।

दक्षकुयज्ञविनाशकलिङ्गं कनकमहामणिभूषितलिङ्गम् ।
फणिपतिवेष्ठितशोभितलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।४।।

कुंकुमचन्दनलेपितलिङ्गं पंकजहारसुशोभितलिङ्गम् ।
संचितपापविनाशकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।५।।

देवगणावलिसेवितलिङ्गं भावविवर्धनकारणलिङ्गम् ।

दिनकरकोटिप्रभाकरलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।६ ।।
अष्टदलैः परिवेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।७ ।।
सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसमर्चितलिङ्गम् ।
परात्परं परमात्मकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।८ ।।

लिंगाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेनसह मोदते ।।

* * *

## ।। शिवस्तोत्रम् ।।

शिवहरशंकर गौरीशं वन्दे गङ्गाधरमीशम् ।
रुद्रं पशुपतिमीशानं कलये काशीपुरनाथम् ।।१ ।।

विश्वेश तवशरणं विश्वनाथ तव शरणम् ।
भाललोचन परमानन्द नीलकण्ठ तव शरणम् ।।२।।
गौरीश तवशरणं गौरीनाथ तव शरणम् ।
नन्दिवाहन नागभूषण चन्द्रशेखर तव शरणम् ।।३।।
वीरेश तवशरणं वीरविक्रम तव शरणम् ।
विष्णुवल्लभ विरुपमलोचन विशालभाल तव शरणम् ।।४।।
भूतेश तवशरणं भूतिधारक तव शरणम् ।
भवभयमोचक भीमपराक्रम भुजङ्गभूष तव शरणम् ।।५।।
पतितपावन तवशरणं पतितोद्धारक तव शरणम् ।
परात्पर पार्वतीप्रिय पुराणपुरुष तव शरणम् ।।६।।
करुणानिधे तवशरणं करुणासागर तव शरणम् ।

कामविदारक कलिमलनाशक कपालमाल तव शरणम् ॥७॥
निजानन्द तवशरणं निजपददायक तव शरणम् ।
नित्य निरंजन निरुपमरुप निखिलानन्द तव शरणम् ॥८॥
मायाविरहित तवशरणं मायातारक तव शरणम् ।
मायाजलनिधिमग्नममांकितमायापालक तव शरणम् ॥९॥

* * *

## ॥ गुरुस्तुतिः ॥

न गुरोरधिकं तत्वं न गुरोरधिकं तपः ।
तस्मात् परतरं नास्ति तस्मै श्रीगुरवे नमः ॥१॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
मंत्रमूलं गुरोर्वाक्यं मुक्तिमूलं गुरोः कृपा ॥२॥

## ।। शिवाष्टोत्तरशतनामावलिः ।।

ॐ शिवाय नमः
ॐ महेश्वराय नमः
ॐ शंभवे नमः
ॐ पिनाकिने नमः
ॐ शशिशेखराय नमः
ॐ वामदेवाय नमः
ॐ विरुपाक्षाय नमः
ॐ कपर्दिने नमः
ॐ नीललोहिताय नमः
ॐ शंकराय नमः ।।१०।।
ॐ शूलपाणये नमः

ॐ खट्वांगिने नमः
ॐ विष्णुवल्लभाय नमः
ॐ शिपिविष्टाय नमः
ॐ अंबिकानाथाय नमः
ॐ श्रीकंठाय नमः
ॐ भक्तवत्सलाय नमः
ॐ भवाय नमः
ॐ शर्वाय नमः
ॐ त्रिलोकेशाय नमः ।।२०।।
ॐ शितिकंठाय नमः
ॐ शिवाप्रियाय नमः

ॐ उग्राय नमः
ॐ कपालिने नमः
ॐ कामारये नमः
ॐ अन्धकासुरसूदनाय नमः
ॐ गंगाधराय नमः
ॐ ललाटाक्षाय नमः
ॐ कालकालाय नमः
ॐ कृपानिधये नमः ।।३०।।
ॐ भीमाय नमः
ॐ परशुहस्ताय नमः
ॐ मृगपाणये नमः

ॐ जटाधराय नमः
ॐ कैलासवासिने नमः
ॐ कवचिने नमः
ॐ कठोराय नमः
ॐ त्रिपुरान्तकाय नमः
ॐ वृषांकाय नमः
ॐ वृषभारुढाय नमः ।।४०।।
ॐ भस्मोद्धूलितविग्रहाय नमः
ॐ सामप्रियाय नमः
ॐ स्वरमयाय नमः
ॐ त्रिमूर्तये नमः
ॐ अजनीश्वराय नमः
ॐ सर्वज्ञाय नमः

ॐ परमात्मने नमः
ॐ सोमसूर्याग्निलोचनाय नमः
ॐ हविषे नमः
ॐ यज्ञपतये नमः ।।५०।।
ॐ सोमाय नमः
ॐ पंचवक्त्राय नमः
ॐ सदाशिवाय नमः
ॐ विश्वेश्वराय नमः
ॐ वीरभद्राय नमः
ॐ गणनाथाय नमः
ॐ प्रजापतये नमः
ॐ हिरण्यरेतसे नमः
ॐ दुर्धर्षाय नमः

ॐ गिरीशाय नमः ।।६०।।
ॐ गिरिशाय नमः
ॐ अनघाय नमः
ॐ भुजंगभूषणाय नमः
ॐ भर्गाय नमः
ॐ गिरिधन्वने नमः
ॐ गिरिप्रियाय नमः
ॐ कृत्तिवाससे नमः
ॐ पुराराये नमः
ॐ भगवते नमः
ॐ प्रमथाधिपाय नमः ।।७०।।
ॐ मृत्युंजयाय नमः
ॐ सूक्ष्मतनवे नमः

ॐ जगद्रूपिणे नमः
ॐ जगद्गुरवे नमः
ॐ व्योमकेशाय नमः
ॐ महासेनजनकाय नमः
ॐ चारुविक्रमाय नमः
ॐ रुद्राय नमः
ॐ भूतपतये नमः
ॐ स्थाणवे नमः॥८०॥
ॐ अहिर्बुध्न्याय नमः
ॐ दिगंबराय नमः
ॐ अष्टमूर्तये नमः
ॐ अनेकात्मने नमः

ॐ सात्त्विकाय नमः
ॐ शुद्धविग्रहाय नमः
ॐ शाश्वताय नमः
ॐ खंडपरशवे नमः
ॐ अजाय नमः
ॐ पाशविमोचकाय नमः॥९०॥
ॐ मृडाय नमः
ॐ पशुपतये नमः
ॐ देवाय नमः
ॐ महादेवाय नमः
ॐ अव्ययाय नमः
ॐ पराय नमः

ॐ पूषदंतभिदे नमः
ॐ अव्यग्राय नमः
ॐ दक्षाध्वरहराय नमः
ॐ हराय नमः॥१००॥
ॐ भगनेत्रहृते नमः
ॐ अव्यक्ताय नमः
ॐ सहस्राक्षाय नमः
ॐ सहस्रपदे नमः
ॐ अपवर्गप्रदाय नमः
ॐ अनंताय नमः
ॐ तारकाय नमः
ॐ परमेश्वराय नमः॥१०८॥

॥ इति श्रीशिवाष्टोत्तरशतनामावलिः ॥

## ।। श्रीजगद्गुरुविश्वाराध्याष्टकम् ।।

विश्वेशामललिङ्गगर्भजननं विद्वन्नुताङ्घ्रिद्वयम ।
शश्वत्स्थापितवीरशैवसमयं शास्त्रोत्तमाम्भोनिधिम् ।।
विश्वामित्रवसिष्ठनन्दितकथं विज्ञानसूर्योदयम् ।
विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।१ ।।
मीमांसाद्वयसूर्यचन्द्रनयनं मिथ्यात्वमेघानिलम् ।
सामाथर्वर्ग्यजुरध्वरश्रुतिमतं साक्षात्पशूनां पतिम् ।।
सीमातीतशिवागमावलिलसत् सिद्धान्तबुद्धाखिलम् ।
विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।२ ।।
कामादिद्विपकुम्भभञ्जनहरि कामप्रदाग्रेसरम् ।
रामादिप्रभुपूजिताङ्घ्रियुगलं राजीवराजाननम् ।।
धामाङ्गीकृतकाशिकापुरवरं धन्यीकृतात्मोदयम् ।

विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।३।।
श्रीमत्सिद्धसुरासुरेन्द्रनिकर–क्षेमङ्करं शङ्करम् ।
प्रामाण्याखिलवेदशास्त्रघटना–पद्माकरं माकरम् ।।
भूमीमण्डलवीरशैवजनता–बोधोन्नतं सन्नतम् ।
विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।४।।
सारासारविवेकदर्शनविधौ संख्यावदध्यापकम् ।
प्रारब्धाखिलपापपुञ्जतुहिन–प्रध्वंसभानूपम् ।।
वीरश्रीशिवधर्मरक्षणपटुं विद्यार्थिचिन्तामणिम् ।
विश्वाराध्यजगद्गुरूं भजत भो ! विद्याप्रभुत्वप्रदम् ।।५।।
मुक्तिश्रीवनिताविलासनिलयं मोहाद्रिवज्रायुधम् ।
भक्तोद्धारकथासुधारसमयं पापाटवीपावकम् ।।
शक्तिप्रोतशिवाद्वितीयहृदयं शान्ताभिलाषोदयम् ।

विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।६ ।।

इच्छामात्रविनिर्मिताष्टविभवं हेमासनोपस्थितम् ।
स्वच्छन्दाचरणस्वतन्त्रनिगमं स्वच्छान्तरङ्गोज्ज्वलम् ।।
चिच्छक्तिप्रभुतामहेश्वरनिभं श्रीमद्विरक्तेश्वरम् ।
विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।७ ।।

काशीजङ्गमवाटिकामठमहाकैलासकल्पद्रुमम् ।
व्यासब्रह्मगवीनिरुपितशिवं व्यासोक्ततत्त्वक्रमम् ।।
ईशेशानमुखाम्बुजातजननं हेंलाजगत्पालनम् ।
विश्वाराध्यजगद्गुरुं भजत भो ! विद्याप्रभुत्वप्रदम् ।।८ ।।

श्री विश्वाराध्याष्टकं पुण्यं वीरभद्रगुरुस्तुतम् ।
गुरुभक्तो जपेन्नित्यं परमैश्वर्यसिद्धये ।।

* * *

## ।। श्रीजगद्गुरुविश्वाराध्याष्टकम् ।।

ईशानेशानवक्राब्जसंभवं प्रमथप्रियम् ।
कैलासे विश्वकर्णाख्यं कृतेपंचाक्षराह्वयम् ।।१।।

त्रेतायां पंचवक्त्राख्यं द्वापरें विश्वकर्णकम् ।
विश्वाराध्य इति ख्यातं कलौ कल्याणदायकम् ।।२।।

सर्वलोकेषु संचार्य स्थापयित्वा शिवागमान् ।
जगद्गुरुत्वमापन्नं जगद्रक्षणकारणम् ।।३।।

स्वर्णवर्णं स्वर्णवर्णकंथाकंबलभूषितम् ।
स्वर्णवर्णं जटाजूटं स्वर्णविद्धकमण्डलम् ।।४।।

भिक्षापात्रधरं भव्यं बिल्वदण्डविभूषितम् ।
भस्मघुंटिकया युक्तं भस्मरेखाविराजितम् ।।५।।

रुद्राक्षमालाभरणं रुद्रयज्ञोपवीतिनम् ।

लिंगांगयोगतत्त्वज्ञं लिंगपूजापरायणम् ।।६।।
भाष्यकारं पञ्चवर्णसूत्रकारं शिवंकरम् ।
सर्वतंत्रस्वतंत्रं च स्कंदगोत्राधिपं परम् ।।७।।
वेदवेदांगतत्त्वज्ञं वेदार्थप्रतिपादकम् ।
विश्वाराध्यं गुरुं वन्दे विश्वरक्षणतत्परम् ।।८।।
विश्वाराध्यगुरुस्तोत्रं काशीनाथकविस्तुतम् ।
त्रिसंध्यं यः पठेन्नित्यं स याति श्रीगुरोःपदम् ।।९।।

पं. काशीनाथकविकृतं
श्रीजगद्गुरुविश्वाराध्याष्टकं
संपूर्णम् ।।

***

## ।। श्रीविश्वाराध्यभजनम् ।।

विश्वाराध्यजगद्गुरुचरणं विश्वे भजत विविधधनकरणम् ।
शाश्वतदु:खमहाम्बुधितरणं विश्वेशोद्गमविद्याभरणम् ।।१

मङ्गलमयमहनीयचरित्रं लिङ्गतनुत्रयसङ्गपवित्रम् ।
सङ्गतगिरिजानन्दनगोत्रं जङ्गमलिङ्गगुरुस्तुतिपात्रम् ।।२ ।।

गुरुसामन्तकदम्बविराजं परमेशानमुखोद्गतिभाजम् ।
परिहृतनास्तिकभावनबीजं परिवृत्तवैदिकभक्तसमाजम् ।।३ ।।

सुरनरबोधितशाम्भवशास्त्रं परधर्माचलपाशुपतास्त्रम् ।
करधृतकाञ्चनकन्थावस्त्रं हरलीलासंहृतकुसुमास्त्रम् ।।४ ।।

सनकाद्यखिलमुनिस्तुतभाषं विनयौदार्यगुणावलिभूषम् ।
अनुकम्पामृतकृतजनतोषं मनसिजवैरिमनोहरवेषम् ।।५ ।।

दुरितव्रातकुजातकुठारं परिशुद्धाखिलभक्तविहारम् ।
निरुपमविद्यामहिमागारं वरकाशीपुरवसुधाधारम् ।।६ ।।
काशीजङ्गमवाटीमठ भूकैलासान्त:कल्पकवृक्षं ।
व्यासब्रह्मपथाम्बरसोमं वासववन्दितलिङ्गिललामम् ।।७ ।।
चारुतरमहोदारसुहृदयं धीरभक्तजनतारणसदयं ।
भूरितप:परिपूतकुवलयं वीरभद्रगुरुमानसनिलयम् ।।८ ।।

इति विश्वाराध्य भजनाष्टकम ।।

## ।। आनन्दभजनम् ।।

श्रीगुरुजङ्गमलिङ्गमहेन्द्र, इन्द्रोपेन्द्रसमर्चितचरण ।
चरणाम्भोजयुगानतशत्रो, शत्रुव्रातमदादिविदूर ।
दूरतिरस्कृतदुर्जनसङ्ग, सङ्गतवैदिकसज्जनसङ्घ ।

सङ्घक्षेमसदागमबोध, बोधानन्दपरिष्कृतविबुध ।
विबुधजनेष्टजगद्गुरुमुद्र, मुद्रायोगसमाधिनिवास ।
वासस्वीकृतसुरुचिरकाशे, काशीविश्वेश्वरतनुभूत ।
भूतगणावलिसम्मतनाथ, नाथविहीननरामरभूज ।
अर्थभ्रान्तिनिवारणधिषण, धिषणाद्यखिलगुरुव्रजपूज्य ।
पूज्यतपोमहिमोद्धृतविश्व, विश्वाराध्यगुरुत्तम पाहि ।

(अत्र चरणान्ते सर्वत्र यथेच्छं दीर्घोऽनुमन्यते)

* * *

## ।। श्रीजगद्गुरुविश्वाराध्याष्टोत्तरशतनामावलिः ।।

### मङ्गलाचरणम्

विश्वेशलिङ्गसम्भूतं विश्वकल्याणकारणं ।
विश्वकर्णाभिधं वन्दे विश्वाराध्यं जगद्गुरुम् ।।

## नामावलिस्तोत्रम्

विश्वाराध्यो विभु-र्वन्द्यो विश्वनाथो विचक्षणः ।
विश्वविद्यो विशुद्धात्मा विश्वकर्णो विधिस्तुतः ॥१॥
विश्वेशजो विशालाक्षो विश्वकर्ता जगद्गुरुः ।
स्कन्दगोत्रपति-र्बिल्वी स्पन्दज्ञ-स्सुमुख-श्शमी ॥२॥
कृशान्वक्षः कृपापूर ईशानोत्थ-श्शिवो गुरुः ।
कुलीनेष्टो गुरुप्रष्ठो-ऽचलशक्ति : फलप्रदः ॥३॥
वीतरागो विरक्तेड्यः पीतकन्थः प्रियागमः ।
जङ्गमेन्द्रो जगन्नाथो मङ्गलाङ्गो महागुरुः ॥४॥
ज्ञानपीठेश्वरो मुक्तो ज्ञानी माहेश्वरो-ऽद्भुतः ।
पञ्चवर्णकवि-र्भव्यः काञ्चनाभः कलाधरः ॥५॥
परिपूर्णः परब्रह्म हरिकेशवनालयः ।

सारस्वताग्रणी–स्सोमो धीरो भक्तसुरद्रुमः ।।६।।
वाराणसीगुरु–र्मुख्यो वीरशैवप्रवर्तकः ।
आकाशतत्व ओङ्कार–स्साकार–श्शिवभूसुरः ।।७।।
प्रपञ्चसत्यतावादी प्रस्थानत्रयभाष्यकृत् ।
शिवसूत्रानुसन्धाता शिवाद्वैतविधायकः ।।८।।
काशिराजार्चितो दिव्यः पशुपाशच्छि–दुन्नतः ।
यकारबीज–स्सर्वात्मा सकलेश–स्सनातनः ।।९।।
वर्णाश्रमप्रभु–र्वेत्ता पूर्णमूर्तिः पुरोहितः ।
पुष्कलो विबुधो लिङ्गी निष्कर्षो निधनो यतिः ।।१०।।
सुन्दरो बन्धुर–श्शूरो नन्दिवाहो नतामरः ।
वरेण्यो वसुधामान्यो वरदो वत्सलो वशी ।।११।।
त्रिलोकेड्यःस्त्रिकालज्ञस्त्रिलिङ्गोलिङ्गदोऽव्ययः ।

दीक्षागुरुः प्रदीप्ताङ्गो मोक्षदोऽ–न्तर्मुखो मुनिः ।।१२।।

वसिष्ठबोधको वर्णी शासको धर्मपालकः।

भावलिङ्गः परञ्ज्योतिः पावनः प्रमथाधिपः ।।१३।।

नामान्यष्टोत्तरशतं विश्वाराध्यजगद्गुरोः ।

विश्वसौख्याय जग्रन्थ वीरभद्रो जगद्गुरु : ।।

।। शिवस्तुतिः ।।

त्रैलोक्यसंपदालेख्यसमुल्लेखनभित्तये ।

सच्चिदानन्दरुपाय शिवाय ब्रह्मणे नमः।।

।। शक्तिस्तुतिः ।।

यामाहु सर्वलोकानां प्रकृतिं शास्त्रपारगाः ।

तां धर्मचारिणीं शम्भो प्रणमामि परां शिवाम् ।।

## मङ्गलम्

जय–जय विश्वाराध्य सुगुरो ।
जय–जय भक्तावलिविबुधतरो ।। जय ।।
अतुलितमहिमा – श्रितयतिसोम ।
हतविकटयमा – दृतयमनियम ।।१ ।।
गुरुचक्रेश्वर परमदयाकर ।
दुरितनिचयहर हरमतधीर ।।२ ।।
ज्ञानपीठघन दीनावनधन ।
आनतभुवने – शानसमान ।।३ ।।
शरभवगोत्र हरभवगात्र ।
परमपवित्र गुरुनुतपात्र ।।४ ।।
वीरशैवनर – वारिधिहिमकर ।
वीरभद्रगुरु – सारसमिहिर ।।५ ।।

# ।। श्रीमज्जगद्गुरुविश्वाराध्याष्टोत्तरशतनामावलिः ।।

ॐ श्रीविश्वाराध्याय नमः
ॐ विश्वकर्णाय नमः
ॐ विश्वनाथोद्भवाय नमः
ॐ विश्वरूपाय नमः
ॐ विश्ववंद्याय नमः
ॐ विश्वकर्त्रे नमः
ॐ विश्वगोप्त्रे नमः
ॐ विश्वहर्त्रे नमः
ॐ विश्वगुरवे नमः
ॐ विश्वविजयाय नमः ।।१०।।
ॐ विश्ववेषधराय नमः

ॐ विश्वविद्याधिनाथाय नमः
ॐ विश्वशास्त्रयोनये नमः
ॐ विश्ववेद्याय नमः
ॐ विश्वचक्षुषे नमः
ॐ विश्वक्लेशनाशाय नमः
ॐ विश्वक्षालयाय नमः
ॐ विश्वकेतुनाशाय नमः
ॐ विश्वविग्रहाय नमः
ॐ विश्वसंपद्दायिने नमः ।।२०।।
ॐ विश्वमुनिसेव्याय नमः
ॐ विश्वगणगण्याय नमः

ॐ विश्वभूतदयाय नमः
ॐ विश्वचारिणे नमः
ॐ विश्वाचारिणे नमः
ॐ विश्वाधिकाय नमः
ॐ विश्वाधाराय नमः
ॐ विश्वागमगम्याय नमः
ॐ विश्वासवेद्याय नमः
ॐ विशाखप्रियाय नमः ।।३०।।
ॐ विशालाक्षाय नमः
ॐ विशालजटाय नमः
ॐ विशिष्टाय नमः

ॐ विशिष्टार्तिहराय नमः
ॐ विशिष्टगुणाय नमः
ॐ विशिष्टेष्टलिङ्गाय नमः
ॐ विशिष्टाद्वैतवादिने नमः
ॐ विशुद्धाय नमः
ॐ विशुद्धज्ञानदाय नमः
ॐ विशुद्धान्तःकरणाय नमः ॥४०॥
ॐ विशुद्धेंद्रियाय नमः
ॐ विशदयशसे नमः
ॐ विषयविदूराय नमः
ॐ विषादविनाशाय नमः
ॐ विष्णुसेव्याय नमः
ॐ विस्मयाय नमः

ॐ विस्मयकराय नमः
ॐ विस्तृतशैवसिद्धान्ताय नमः
ॐ वियद्रूपाय नमः
ॐ वियद्गामिने नमः ॥५०॥
ॐ वियद्गंगातीरवासिने नमः
ॐ विरजानलदग्धाय नमः
ॐ विरक्ताय नमः
ॐ विरक्तगुरवे नमः
ॐ विराड्वन्दिताय नमः
ॐ विराड्रूपाय नमः
ॐ विराजमानकंथाय नमः
ॐ विरुपाय नमः
ॐ विरुपाक्षप्रियाय नमः

ॐ विरोधासृष्ट्याय नमः ॥६०॥
ॐ विलासनाशाय नमः
ॐ विवर्णाय नमः
ॐ विविधसुखदाय नमः
ॐ विबुधाय नमः
ॐ विबुधस्तुत्याय नमः
ॐ विभवाय नमः
ॐ विभवे नमः
ॐ विभाकरभासाय नमः
ॐ विभावसुनेत्राय नमः
ॐ विभूतिभूषिताय नमः ॥७०॥
ॐ विभूतिरुपाय नमः
ॐ विभूतिमयाय नमः

ॐ विभूतिदाय नमः
ॐ विभ्रष्टमदाय नमः
ॐ विनष्टमत्सराय नमः
ॐ विनष्टमायाय नमः
ॐ विनमद्देवाय नमः
ॐ विनाशशून्याय नमः
ॐ विनोदशीलाय नमः
ॐ विमतमतमर्दनाय नमः ।।८०।।
ॐ विमुक्ताय नमः
ॐ विमुक्तजनसेविताय नमः
ॐ विमोहाय नमः
ॐ विभ्रमोहिजनोद्धारकाय नमः

ॐ विधिवन्द्याय नमः
ॐ विधिविदूराय नमः
ॐ विधिबोधकाय नमः
ॐ विधिगम्याय नमः
ॐ विधिवाक्यविधायिने नमः
ॐ विधुकोटिशान्ताय नमः ।।९०।।
ॐ विद्याधरवन्दिताय नमः
ॐ विध्वस्ततापत्रयाय नमः
ॐ विहृतमलत्रयाय नमः
ॐ विगतगुणत्रयाय नमः
ॐ विलुप्तशक्तित्रयाय नमः
ॐ वितथविरोधिने नमः

ॐ विचक्षणाय नमः
ॐ विचक्षणप्रियाय नमः
ॐ विचारपराय नमः
ॐ विजनासीनाय नमः ।।१००।।
ॐ विक्रमाय नमः
ॐ विघ्नहराय नमः
ॐ विघ्नेश्वरप्रियाय नमः
ॐ विकाररहिताय नमः
ॐ विपुलवरदाय नमः
ॐ विधृतरुद्राक्षाय नमः
ॐ विभ्राजमानतबिल्वदण्डाय नमः
ॐ विज्ञानकोशाय नमः ।।१०८।।

* इति विश्वाराध्याष्टोत्तर शतनामावलिः *

मङ्गलम्

## ।। श्रीविश्वाराध्यांची आरती ।।

श्री विश्वाराध्याय मङ्गलम्। शिव विश्वैकपालाय मङ्गलम् ।।
विश्वेशजाताय विश्वादिबीजाय । श्रीविश्ववंद्याय मङ्गलम् ।।धृ।।
चरवृंदवंद्याय मङ्लम् । वरचरनीनीतिबोधाय मङ्गलम् ।
गुरुरुपधाराय गुरुराजिराजाय । परिपूतदेहाय मङ्गलम् ।।१।।
भवमूलभंगाय मङ्लम् । शिव शिवलिंगसंगाय मङ्गलम् ।
भवमंङ्गलांगाय शिवपिंग चूडाय। कवितुंगसेव्याय मङ्गलम् ।।२।।
काशीपुरेशाय मङ्लम् । कवि काशीनाथेशाय मङ्गलम् ।
क्लेशापहाराय पाशप्रमोचाय । श्रीशादि मान्याय मङ्गलम् ।।३।।

।। इति श्रीविश्वाराध्या आरती ।।

## ।। पंचाचार्यांची आरती ।।

मंगलमय महालिंगोद्भव गुरु शिवांग पंचाचार्यांना । लिंगविभूषित भंगभयादि मंगलारती करु त्यांना ।।धृ।। जन्ममरणभयहरण करुनी पावन करिसी भक्तांना ।। तनमन अर्पण करितो भावे सिद्धरेणुकाचार्यांना ।।१।। थोर घोर भव दूर कराया सुरवर भाकिती तव करुणा।। वीरशैवमत–वारिधिशशिधर सार दारुकाचार्यांना ।।२।। लोकदयाळा सर्वव्यापका असमी बोधक सकळांना ।। शोकनाशका भाकितो करुणा एकोरामाराध्यांना ।।३।। चंडमतांसी खंडन करुनी बोधिशी ब्रह्माखंडांना ।। पिंडी ब्रह्मांडी गुरु व्यापका नमितो पंडिताराध्यांना ।।४।। विश्वेश्वरलिंगोद्भव होसी विश्वपालना दयाघना ।। ईश्वरभक्तिसी शाश्वत करि त्या स्मरतो विश्वाराध्यांना ।।५।। अज्ञ बांधवा सुबोध कराया नमितो पंचाचार्यांना ।। वीरगोत्रोद्भव सांब विनवितो कृपा करावी या दीना ।।६।।

## ।। श्री भीमा शंकराची आरती ।।

आरती भीमाशंकरा ज्योतिर्लिंग परात्परा ।
ओवाळीतो कर्पूर शिवगौरा । भीमाशंकरा ।।धृ.।।

भक्ता सोडूनी बहूदूर । मंदिर तुझे दरीखोर ।
सत्व पहासी खरोखर। भीमाशंकरा ।।१।।

भीमा निघुनि तुझे चरणी । पावन करती सर्व धरणी ।
करणी आहे तुझी न्यारी । भीमाशंकरा ।।२।।

गगन भेदी तुझे शिखर । पहाता पाप ताप हार ।
सन्मुखी उभा नंदीश्वर । भीमाशंकरा ।।३।।

एक आरती तुजला राया । शोक नाशक शिवराया ।
भाकितो शंभु गौरीवरा। भीमाशंकरा ।।४।।

भूकैलास खरोखर । कमलजा देवी अवतार ।
करितो प्रभू नमस्कार । भीमाशंकरा ।।५।।

## ।। श्री सद्‌गुरुची आरती ।।

आरती करु सद्‌गुरुला ब्रह्मचारी योगियाला ।।धृ. ।।
माया विकार दुर करुनी मठ बांधिला निरंजनी ।
दश इंद्रिये, अकर्षूनी, तप साधिले, पंचअग्नि
साहिले, अष्टांग योग, साहिले, अष्टांग योग,
कठिण शीत उष्ण
सह पर्जन्य साहिले बळे शरीराला,
आसन वसनाचा त्याग केला ।।१ ।।
पृथ्वी आकाशपर्यंत, दिसे तुज ब्रह्ममूर्तिमंत
राहसी सहज समाधिस्त सदा सर्वकाळ ध्यानस्थ
रमसी सहस्र दळावरती, रमसी सहस्र दळावरती,

अलक्ष लक्ष, लावूनी अक्ष,
हृदयी निजानंद भरला, स्वात्म ऐक्य स्वरुपी झाला ।।२।।
स्वानंदाचे ताट हाती, पंचप्राण पंच आरती
घृतवासना, त्रिगुण वाती, ओवाळुनी, आत्मलिंग ज्योति
ओवाळुनि, मूर्ती जिवे भावे, ओवाळुनि, मूर्ती जिवे भावे,
अनुहत ध्वनी, वाजे निशीदिनी
देवलिंग गुरुपदि, अनुसरला, तयाच्या वरद हस्ते तरला ।।३।।

## ।। आरती मन्मथस्वामींची ।।

आरती शिवराजा, मन्मथ स्वामी महाराजा ।
वेदातांचे सार, मुख्य पेरिले बीज ।।धृ. ।।

समाधी महास्थळी, सर्प व्याघ्रांची जाळी ।
निर्वैरश्वापदे हो, समदृष्टीने न्याहाळी ।।१ ।।

शिवभक्ति लोप झाली, विश्व शिवमय केले ।
ग्रंथ हा परमरहस्य, गुह्य प्रकट केले ।।२ ।।

अभंगी निरुपण, अनुभविले ज्ञान ।
आनंद शिवदासा, सर्व शुभ कल्याण ।।३ ।।

## ।। आरती वीरभद्राची ।।

आरती वीरभद्रा। शिवप्रिया महारुद्रा ।।धृ.।।
प्रतापी तू रुद्र थोर । काळाप्रती दंडणार ।।
दृष्टांचा रे संहार। करिसी भक्तांचे माहेर ।।१।।
दक्षे शिवनिंदा केली। त्यासी शिक्षा त्वा दिली ।।
तोषविला चंद्रमौळी। श्रेष्ठ ताता तू रे बळी ।।२।।
दक्षमख विध्वंसून । देव केले अती दीन ।।
भक्तांचा तू सखा पूर्ण । भक्त रक्षिसी धावून ।।३।।
ब्रह्मांड हे उचलून । नेशी प्रतापी तू पूर्ण ।।
शिवभक्त दयाघन । आहेसी तू शिवनंदन ।।४।।
शिवापासी निरंतर । वससी रे निर्धार ।।
लक्ष्मण हा किंकर तुमचा म्हणवितो पामर ।।५।।

## ।। कर्पुर आरती ।।

कर्पुर आरती सुंदर हाती घेऊन सांबाला ।
ओवाळिन मी प्रेमळ चित्ती । श्री गुरु लिंगाला ।।धृ.।।
कर्पूरज्योती कर्पूरगौरा मंगलमूर्तीला ।
पापविनाशी दुःखविनाशी सुंदर लिंगाला ।
श्रीगुरुमाता श्रीगुरुदाता शोभित लिंगाला ।
दर्प विहारी दुर्गुणहारी शंकर लिंगाला ।।१।।
नारद ब्रम्हाविष्णु वरांनी पूजित लिंगाला ।
भाग्य विधात्या सौख्य सुदात्या जंगम लिंगाला ।
इच्छित वस्तू चिंती दात्या दायक लिंगाला ।
गर्भित अर्था तारक तीर्था श्रीगुरुलिंगाला ।।२।।

रेवणार्या श्री मरुलार्या उभ्दव लिंगाला ।

विश्वकर्ण घंटाकर्ण एकोराम श्री लिंगाला ।

रेवणसिद्धेशा तव पादागुंष्ठ सुलिंगाला ।

धूळ जलानी शुद्ध करीत्या इष्ट सु लिंगाला ।।३।।

## ।। लिंगाची कर्पुरारती ।।

कर्पूर गौरं करुणावतारं संसारसारं भुजगेंद्र हारं ।।धृ.।।

सदावसंतं हृदयारविंदे भवं भवानीसहितं नमामि ।।१।।

गुणातीत कांतं परब्रह्म शांतं सुविद्यादिदेवं भवारण्य दाहं ।।२।।

उमानाथमीशं जराजन्मनाशं परंज्योतिर्लिंगं नमामीष्टलिंगम् ।।३।।

## ।। साष्टांग नमस्कार ।।

भो कल्याण महाभाग शिवज्ञान महोदधे ।

आचार्यवर्य संप्राप्तं रक्ष मां भवरोगिणम् ।।

हरहर, कालहर, कर्महर, सर्वपाप, परिहर, भो महास्वामिन्! महाप्रसाद, पूर्वजन्म, कर्मनिवारक, दीक्षागुरु, शिक्षागुरु, मोक्षगुरु, गुरोर्गुरु, चिद्गुरु, आनंदगुरु, मद्गुरु, कुलगुरु, परमगुरु, परामाराध्य, अष्टावरण षटस्थल पंचाचार महाज्ञानी पूज्य महामहंत भगवत् महापाद शरण शरणार्थी (जगद्) गुरुमहाराज साष्टांग नमस्कार! गुरुपादोदक घेण्यास आज्ञा मिळावी, अशी प्रार्थना

टीप : याप्रमाणे प्रार्थना करुन २ हात, २ गुडघे, २ पाय,छाती व मस्तक जमिनीला टेकवून साष्टांग नमस्कार (दंडवत) घालावा. श्रीजगद्गुरूंची 'तथास्तु' अशी आज्ञा झाल्यावर उठून हात धुवून त्यांचे समोर खुज्या आसनावर बसून तीर्थ स्वीकारावे.

### ।। तीर्थ स्वीकार मंत्र ।।

भवमानस संतुष्टं भवसिंधुनिवारणम् ।

भव्यं भक्तेष्टदं नित्यं पिबामि चरणामृतम् ।।

## श्रीमज्जगद्गुरुपंचाचार्योत्पत्तिक्रम वर्णन.

वीरशैवलिंगीब्राह्मणांना आपले सूत्र, गोत्र, शाखा, प्रवर वगैरे समजणे अत्यावश्यक आहे, म्हणून श्रीपरमेश्वराच्या पाच मुखांपासून उत्पन्न होऊन ज्यांनी वीरशैवधर्माची स्थापना केली त्या पंचाचार्यांची नावे, मुखे, दिशा, उत्पत्तिस्थाने, सिंहासनाधिपत्यस्थाने, गोत्रे, महासूत्रे, प्रवर, त्यांचे हातातील दंड, कमंडलू, कलशाचे धातू, कंथा, शाखा, तत्त्वे, बीजमंत्र, पंचपंचाक्षर मंत्र, प्रत्येक महासूत्राची उपसूत्रे वगैरे क्रमयुक्त माहिती खाली सांगितली आहे –

| श्री परमेश्वराची | १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|---|
| पाच मुखे | सद्योजात | वामदेव | अघोर | तत्पुरुष | ईशान |
| मुखांचे रंग | हिरवा | तांबडा | काळा | पांढरा | पिवळा |
| दिशा | पूर्व | दक्षिण | पश्चिम | उत्तर | ऊर्ध्व |
| पंच गणाधीश्वर | रेणुक | दारुक | घंटाकर्ण | धेनुकर्ण | विश्वकर्ण |

| | | | | | |
|---|---|---|---|---|---|
| पंचाचार्यांची नावे | रेवणाराध्य शिवाचार्य | मरुळाराध्य शिवाचार्य | एकोरामाराध्य शिवाचार्य | पंडिताराध्य शिवाचार्य | विश्वाराध्य शिवाचार्य |
| उत्पत्ति स्थाने | कोल्लिपाकी सोमेश्वरलिंग | वटक्षेत्री सिद्धेश्वरलिंग | द्राक्षाराम रामनाथलिंग | सुधाकुंड मल्लिकार्जुनलिंग | काशीक्षेत्र विश्वनाथलिंग |
| सिंहासनाधिपत्य स्थाने | रंभापुरी (बाळीहळ्ळी) | उज्जयिनी | हिमवत्केदार | श्रीशैल पर्वत | श्रीमहाक्षेत्र काशी |
| गोत्रे | वीर | नंदी | भृंगी | वृषभ | स्कंद |
| महासूत्रे | पड्विडी | वृष्टी | लंबन | मुक्तगुच्छ | पंचवर्ण |
| शाखा | रेणुकशाखा | दारुकशाखा | घंटाकर्णशाखा | धेनुकर्णशाखा | विश्वकर्णशाखा |
| प्रवर | एकाक्षर शिवाचार्य | द्व्यक्षर शिवाचार्य | त्र्यक्षर शिवाचार्य | चतुरक्षर शिवाचार्य | पंचाक्षर शिवाचार्य |

| वेद | ऋग्वेद | यजुर्वेद | सामवेद | अथर्वणवेद | अजपवेद (सूक्ष्मवेद) |
|---|---|---|---|---|---|
| दंड | अश्वत्थदंड (पिंपळ) | पलाशदंड | वेणुदंड | न्यग्रोधदंड (वड) | बिल्वदंड |
| कमंडलू | हरिद्वर्ण | तांबे | लोखंड | कांस्य | सोने |
| कंथा | हिरवी | तांबडी | निळी | पांढरी | पिवळी |
| तत्त्वे | पृथ्वी | आप् | तेज | वायु | आकाश |
| बीज मंत्र | नकार | मकार | शिकार | वाकार | यकार |
| पंच पंचाक्षरमंत्र | प्रसादपंचाक्षर | मायापंचाक्षर | सूक्ष्मपंचाक्षर | स्थूलपंचाक्षर | मूलपंचाक्षर |
| सिंहासनांची नावे | वीरसिंहासन | सद्धर्मसिंहासन | वैराग्यसिंहासन | सूर्यसिंहासन | ज्ञानसिंहासन |

**श्री श्री श्री १००८ जगद्गुरु डॉ. चंद्रशेखर शिवाचार्य महास्वामीजी**
यांच्या चरणी अर्पण

**श्री श्री श्री १०८ ष.ब्र. तपोरत्न गुरुपाद शिवाचार्य महाराज**
हिरेमठ संस्थान, विमलखेड, जिल्हा: बिदर
यांच्या आशिर्वादाने

**लिं.सौ.कां. अन्नपुर्णा त्रंबक स्वामी (सावळे)**
यांच्या स्मरणार्थ

**श्री.व सौ. शांतादेवी विश्वनाथ स्वामी (सावळे)**
**रा.मु.पो. वडवळ (नागनाथ), जि. लातूर**
**यांनी या पुस्तकाची पाचव्या आवृत्तीसाठी अर्थसहाय्य देणगी दिली.**

**ग्रंथ मिळण्याचे ठिकाण**

- शैवभारती शोधप्रतिष्ठान, जंगमवाडी मठ, वाराणसी (उत्तर प्रदेश) स्थिरभाष : (0542) 2450546
- एस.के.हिरेमठ, ५५/४०, शाहीर वस्ती, भवानी पेठ, सोलापूर, स्थिरभाष : (0217) 2727221
चरभाष: 9960222151, 9421033706

